# ।। श्रीस्कन्दमहापुराणम् ।।

## ।। अथ गंगासहस्रनाम स्तोत्रम् ।।

अगस्त्युवाच ।

विनास्नानेनगंगायानृणांजन्मनिरर्थकम् ।
उपायांतरमस्त्यन्येनिस्नानफलंलभेत् ।।१।।

1. The birth of men futile without a holy bath in Ganga. Is there any other means whereby one may get the benefit of holy dip?

अशक्तानांचपंगूनामालस्योपहतात्मनाम् ।
दूरदेशांतरस्थानांगंगास्नानंकथंभवेत् ।।२।।

2. How can the feeble, the lame, those who are overpowered by indolence and those who are in far-off foreign lands, get the benefit of holy bath in Ganga.

दानंवाअथव्रतंवाअथमंत्रःस्तोत्रंजपेअथवा ।
तीर्थांतराभिषेकोवादेवतोपासनंतुवा ।।३।।
यद्यस्तिकिंचित्षडक्त्रगंगास्नानफलप्रदम् ।
विधानांतरमात्रेणतद्वदप्रणतायमे ।।४।।

3-4. O Skanda, to me who have bowed down to you,
kindly say if there is anything that can yield the benefit of holy ablution in Ganga merely by its performance, be it in the form of monetary gift, Vrata (holy vow), Mantra Stotra, Japa, worshipping a deity or holy plunge into another holy river.

त्वत्तोनवेदस्कंदान्योगंगागर्भसमुद्भव ।
परंस्वर्गतरंगिण्यामहिमानंमहामते ।।५।।

5. O Skanda born of the womb of Ganga, O highly intelligent one, none expecting you knows the mighty power of the heavenly river.

स्कंदउवाच ।

संतिपुरायजलानीहसरांसिसरितोमुने ।

स्थानेस्थानेचतीर्थानिजितात्माध्युषितानिच ॥६॥

O sage, here in different places there are Tirthas with sacred waters, lakes and rivers occupied by people who have subdued their self.

दृष्टप्रत्ययकारीणिमहामहिमभांज्यपि ।

परंस्वर्गतरंगिरयाः कोटयंशोपिनतत्रवै ॥७॥

7. They have mighty power and they give apparent results too. But even a ten-millionth part of the heavenly river is not present there.

अनेनैवानुमानेनबुद्धयस्वकलशोद्भव ।

दध्रेगंगोत्तमांगेनदेवदेवेनशंभुना ॥८॥

8. Ganga is being held on his head by Shambhu, the Lord of Devas. Know (the greatness of Ganga) solely as an inference
therefrom, O Pot-born Sage.

स्नानकालेअन्यतीर्थेषुजप्यतेजाह्नवीजनैः ।

विनाविष्णुपदींक्वान्यत्समर्थमघमोचने ॥९॥

9. At the time of taking the holy bath in the other Tirthas, the Japa of Jahnavi is performed by people. Excepting Vishnupadi, what else is capable of ridding one of sins?

गंगास्नानफलंब्रह्मन्गंगायामेवलभ्यते ।

यथाद्राक्षाफलस्वादोद्राक्षायामेवनान्यतः ॥१०॥

10. O holy Brahmana, the benefit of the holy bath in Ganga is derived only from Ganga, just as the taste of grapes is only in the grapes, not in anything else.

अस्त्युपायइहत्वेकःस्योनािविकलंफलम् ।
स्नानस्यदेवसरितोमहागुह्यतमोमुने ॥११॥

11. But, O sage, there is one means whereby the entire benefit of the holy bath in the divine river can be obtained. It is a great secret.

शिवभक्तायशांतायविष्णुभक्तिपरायच ।
श्रद्धालवेत्वास्तिकायगर्भवासमुमुत्तवे ॥१२॥
कथनीयंनचान्यस्यकस्यचित्केनचित्क्वचित् ।
इदंरहस्यंपरमंमहापातकनाशनम् ॥१३॥

12-13. It should be disclosed to one who is a devotee of Shiva, who is quiescent, who has devotion to Vishnu also, who has faith, who is an astika and who desires release from rebirth. It should not be disclosed to anyone else on any occasion. This is a great secret, destructive of great sins.

महाश्रेयस्करंपुरायंमनोरथकरंपरम् ।
ुनिदीप्रीतिजनकंशिवसंतोषसंतति ॥१४॥

14. It is conductive to great welfare and it is meritorious. It causes pleasure to the celestial river and continuity of Shiva's pleasure.

नाम्नांसहस्हंगंगायाःस्तवराजेषुशोभनम् ।
जप्यानांपरमंजप्यंवेदोपनिषदासमम् ॥१४॥

15. The Thousand Names of Ganga  is the most brilliant of all excellent prayers. It is the greatest Japya of all Japyas; it is on a par with the Vedas and Upanishads.

जपनीयंप्रयत्नेनमौनिनावाचकंविना ।
शुचिस्थानेषुशुचिनासुस्पष्टाद्मरमेवच ॥१६॥

16. The japa should be performed carefully by a man who maintains silence. The words are not loudly uttered but the letters should be clearly pronounced. The devotee should be personally pure and sit in a clean place.

ॐ नमोगंगादेव्यै ।

ॐकाररूपिरायजराऽतुलाऽनंताऽमृतस्रवा ।
अत्युदाराऽभयाऽशोकाऽलकनंदाऽमृताऽमला ।।१७।।
अनाथवत्सलाऽमोघऽपंयोनिरमृतप्रदा ।
अव्यक्तलक्षणाऽक्षोभ्याऽनवच्छिन्नाऽपराजिता ।।१८।।
अनाथनाथाऽभिष्टार्थसिद्धिदाऽनंगवर्धिनी ।
अणिमादिगुणाऽधाराग्रगण्याऽलीकहारिणी ।।१९।।
अचिंत्यशक्तिरनघाऽद्भुतरूपाऽघहारिणी ।
अद्रिराजसुताऽष्टांगयोगसिद्धिप्रदाऽच्युता ।।२०।।
अक्षुण्णशक्तिरसुदाऽनंततीर्थाऽमृतोदका ।
अनंतमहिमाऽपाराऽनंतसौख्यप्रदाऽन्नदा ।।२१।।
अशेषदेवतामूर्तिरघोराऽमृतरूपिणी ।
अविद्याजालशमनीह्यप्रतर्क्यगतिग्रदा ।।२२।।
अशेषविघ्नसहर्त्रीत्वशेषगुणगुंफिता ।
अज्ञानतिमिरज्योतिरनुग्रहपरायणा ।।२३।।
अभिरामाऽनवद्यांग्यनंतसाराऽकलंकिनी ।
आरोग्यदाऽऽनंदवल्लीत्वापन्नार्तिविनाशिनी ।।२४।।
आश्चर्यमुर्तिरायुष्याह्याढ्याऽऽद्याऽऽप्राऽऽर्यसेविता ।
आप्यायिन्याप्तविद्याऽऽख्यात्वानंदाऽऽश्वासदायिनी ।।२५।।

आलस्यघ्न्यापदांहंत्रीह्यानंदामृतवर्षिणी ।
इरावतीष्टदात्रीष्टात्विष्टापूर्तफलप्रदा ॥२६॥
इतिहासश्रुतीड्यार्थात्विहामुत्रशुभप्रदा ।
इज्याशीलसमिज्येष्ठात्विंद्रादिपरिवंदिता ॥२७॥
इलालंकारमालेद्धात्विंदिरारम्यमंदिरा ।
इदिंदिरादिसंसेव्यात्विश्वरीश्वरवल्लभा ॥२८॥
ईतिभीतिहरेड्याचत्वीडनीयचरित्रभृत् ।
उत्कृष्टशक्तिरुत्कृष्टोडुपमंडलचारिणी ॥२९॥
उदितांबरमार्गोस्रोरगलोकविहारिणी ।
उक्षोर्वरोत्पलोत्कुंभाउपेंद्रचरणद्रवा ॥३०॥
उदन्वत्पूर्तिहेतुश्चोदारोत्साहप्रवर्धिनी ।
उद्वेगघ्न्युष्णशमनीउष्णरश्मिसुताप्रिया ॥३१॥
उत्पत्तिस्थितिसंहारकारिण्युपरिचारिणी ।
ऊर्जंवहंत्यूर्जधरोर्जावतीचोर्मिमालिनी ॥३२॥
ऊर्ध्वरेतःप्रियोर्ध्वाध्वाद्यूर्मिलोर्ध्वगतिप्रदा ।
ऋषिवृंदस्तुतर्द्धिश्चऋणत्रयविनाशिनी ॥३३॥
ऋतंभरर्द्धिदात्रीचऋक्स्वरूपाऋजुप्रिया ।
ऋक्षमार्गवहर्क्षार्चिर्ऋजुमार्गप्रदर्शिनी ॥३४॥
एधिताऽखिलधर्मार्थात्वेकैकामृतदायिनी ।
एधनीयस्वभावैज्यात्वेजिताशेषपातका ॥३४॥

ऐश्वर्यदैश्वर्यरूपाह्यैतिह्यंह्यैंदवीद्युतिः ।
ओजस्विन्योषधीक्षेत्रमोजोदौदनदायिनी ॥३६॥
ओष्ठामृतौन्नत्यदात्रीत्वौषधंभवरोगिणाम् ।
औदार्यचंचुरौपेंद्रीत्वौग्रीह्यौमेयरूपिणी ॥३७॥
अंबराध्ववहांऽबष्ठांबरमालांबुजेक्षणा ।
अंबिकांबुमहायोनिरंधोदांधकहारिणी ॥३८॥
अंशुमालाह्यंशुमतीत्वंगीकृतषडानना ।
अंधतामिस्रहंत्र्यंधुरंजनाह्यंजनावती ॥३९॥
कल्याणकारिणीकाम्याकमलोत्पलगंधिनी ।
कुमुद्वतीकमलिनीकांतिः कल्पितदायिनी ॥४०॥
कांचनाक्षीकामधेनुः कीर्तिकृत्क्लेशनाशिनी ।
क्रतुश्रेष्ठाक्रतुफलाकर्मबंधविभेदिनी ॥४१॥
कमलाक्षीक्लमहराकृशानुतपनद्युतिः ।
करुणार्द्राचकल्याणीकलिकल्मषनाशिनी ॥४२॥
कामरूपाक्रियाशक्तिः कमलोत्पलमालिनी ।
कुटस्थाकरुणाकांताकुर्मयानाकलावती ॥४३॥
कमलाकल्पलतिकाकालीकलुषवैरिणी ।
कमनीयजलाकम्राकपर्दिसुकपर्दगा ॥४४॥
कालकुटप्रशमनीकदंबकुसुमप्रिया ।
कालिंदीकेलिललिताकलकल्लोलमालिका ॥४५॥

क्रांतलोकत्रयाकंडूः कंडूतनयवत्सला ।
खड्गिनीखड्गधाराभाखगाखंडेंदुधारिणी ॥४६॥
खेखेलगामिनीखस्थाखंडेंदुतिलकप्रिया ।
खेचरीखेचरीवंद्याख्यातिः ख्यातिप्रदायिनी ॥४७॥
खंदितप्रणताघौघाखलबुद्धिविनाशिनी ।
खातैनःकंदसंदोहाखड्गखट्वांगखेटिनी ॥४८॥
खरसंतापशमनीखनिः पीयूषपाथसाम् ।
गंगागंधवतिगौरीगंधर्वनगरप्रिया ॥४९॥
गंभीरांगीगुणमयीगतातंकागतिप्रिया ।
गणनाथांबिकागीतागद्यपद्यपरिष्टुता ॥५०॥
गांधारीगर्भशमनीगतिभ्रष्टगतिप्रदा ।
गोमतीगुह्यविद्यागौर्गोप्त्रीगगनगामिनी ॥५१॥
गोत्रप्रवर्धिनीगुण्यागुणातीतागुणाग्रणीः ।
गुहांबिकागिरिसुतागोविंदांघ्रिसमुद्भवा ॥५२॥
गुणनियचरित्राचगायत्रीगिरिशप्रिया ।
गूढरूपागुणवतीगुर्वीगौरववर्धिनी ॥५३॥
ग्रहपीडाहरागुंद्रागरघ्नीगानवत्सला ।
घर्महंत्रीघृतवतीघृततुष्टिप्रदायिनी ॥५४॥
घंटारवप्रियाघोराऽघौघविध्वंसकारिणी ।
घ्राणतुष्टिकरीघोषाघनानंदाघनप्रिया ॥५५॥

घातुकाघूर्णितजलाघृष्टपातकसंततिः ।
घटकृटिप्रपीतापाघटिताशेषमंगला ॥५६॥
घृणावतीघृणानिधिर्घस्मराघूकनादिनी ।
घुसृणापिंजरतनुर्घर्घराघर्घरस्वना ॥५७॥
चंन्द्रिकाचंद्रकांतांबुश्चंचदापाचलद्युतिः ।
चिन्मयीचितिरूपाचचंद्रायुतशतानना ॥५८॥
चांपेयलोचनाचारुश्चार्वंगीचारुगामिनी ।
चार्याचारित्रनिलयाचित्रकृच्चित्ररूपिनी ॥५९॥
चंपूश्चंदनशुच्यबुश्चर्चनीयाचिरस्थिरा ।
चारुचंपकमालाढ्याचमिताशेषदुष्कृता ॥६०॥
चिदाकाशवहाचिंत्याचंचच्चामरवीजिता ।
चोरिताशेषवृचिनाचरिताशेषमंडला ॥६१॥
छेदिताखिलपापौघाछद्मघ्नीछलहारिणी ।
छन्नत्रिविष्टपतलाछोटिताशेषबंधना ॥६२॥
छुरितामृतधारौघाछिन्नैनाश्छंदगामिनी ।
छत्रीकृतमरालौघाछटिकृतनिजामृता ॥६३॥
जाह्नवीज्याजगन्माताजप्याजंघालवीचिका ।
जयाजनार्दनप्रीताजुषणीयाजगद्धिता ॥६४॥
जीवनंजीवनप्राणाजगज्ज्येष्ठाजगन्मयी ।
जीवजीवातुलतिकाजन्मिजन्मनिबर्हिणी ॥६५॥

जाड्यविध्वंसनकरीजगद्योनिर्जलाविला ।

जगदानंदजननीजलजाजलजेक्षणा ।।६६।।

जनलोचनपीयूषाजटातटविहारिणी ।

जयंतीजंजपूकघ्नीजनितज्ञानविग्रहा ।।६७।।

झल्लरीवाद्यकुशलाझलज्झालजलावृता ।

झिंटीशवंद्याझंकारकारिनीझर्झरावती ।।३८।।

टीकिताशेषपातालाटंकिकैनोद्रिपाटने ।

टंकारनृत्यत्कल्लोलाटीकनीयमहातटा ।।६९।।

डंबरप्रवहाडीनराजहंसकुलाकुला ।

डमड्डमरुहस्ताचडामरोक्तमहांडका ।।७०।।

ढौकिताशेषनिर्वाणाढक्कानादचलज्जला ।

ढुंढिविघ्नेशजननीढणड्ढुणितपातका ।।७१।।

तर्पणीतीर्थतीर्थाचत्रिपथात्रिदशेश्वरी ।

त्रिलोकगोप्त्रीतोयेशीत्रैलोक्यपरिवंदिता ।।७२।।

तापत्रितयसंहर्त्रीतेजोबलविवर्धिनी ।

त्रिलक्ष्यातारणीतारातारापतिकरार्चिता ।।७३।।

त्रैलोक्यपावणीपुण्यातुष्टिदातुष्टिरूपिनी ।

तृष्णाछेत्रीतीर्थमातात्रिविक्रमपदोद्भवा ।।७४।।

तपोमयीतपोरूपातपःस्तोमफलप्रदा ।

त्रैलोक्यव्यापिनीतृप्तिस्तृप्तिकृत्तत्त्वरूपिणी ।।७५।।

त्रैलोक्यसुंदरीतुर्यातुर्यातीतपदप्रदा ।
त्रैलोक्यलक्ष्मीस्त्रिपदीतथ्यातिमिरचंद्रिका ॥७६॥
तेजोगर्भातपःसारात्रिपुरारिशिरोगृहा ।
त्रयीस्वरूपिणीतन्वीतपनांगजभीतिनुत् ॥७७॥
तरिस्तरणिजामित्रंतर्पिताशेषपूर्वजा ।
तुलाविरहितातीव्रपापतूलतनूनपात् ॥७८॥
दारिद्र्यदमनीदक्षादुष्प्रेक्षादिव्यमंडना ।
दीक्षावतीदुरावाप्याद्राक्षामधुरवारिभृत् ॥७९॥
दर्शितानेककुतुकादुष्टदुर्जयदुःखहृत् ।
दैन्यहृद्दुरितघ्नीचदानवारिपदाब्जजा ॥८०॥
दंदशूकविषघ्नीचदारिताघौघसंततिः ।
द्रुतादेवद्रुमच्छन्नादुर्वाराघविघातिनी ॥८१॥
दमग्राह्यादेवमातादेवलोकप्रदर्शिनी ।
देवदेवप्रियादेवीदिक्पालपददायिनी ॥८२॥
दीर्घायुःकारिणीदीर्घादोग्घ्रीदूषणवर्जिता ।
दुग्धांबुवाहिणीदोह्यादिव्यादिव्यगतिप्रदा ॥८३॥
द्युनदीदीनशरणंदेहिदेहनिवारिणी ।
द्राघीयसीदाघहंत्रीदितपातकसंततिः ॥८४॥
दूरदेशांतरचरीदुर्गमादेववल्लभा ।
दुर्वृत्तघ्नीदुर्विगाह्यादयाधारादयावती ॥८५॥

दुरासदादानशीलाद्राविणीद्रुहिणस्तुता ।
दैत्यदानवसंशुद्धिकर्त्रीदुर्बुद्धिहारिणी ।।८६।।
दानसारादयासाराद्यावाभूमिविगाहिनी ।
दृष्टादृष्टफलप्राप्तिर्देवतावृंदवंदिता ।।८७।।
दीर्घव्रतादीर्घदृष्टिर्दीप्ततोयादुरालभा ।
दंडयित्रीदंडनीतिर्दुष्टदंडधरार्चिता ।।८८।।
दुरोदरघ्नीदावार्चिर्द्रवद्द्रव्यैकशेवधिः ।।
दीनसंतापशमनीदात्रीदवथुवैरिणी ।।८९।।
दरीविदारणपरादांतादांतजनप्रिया ।
दारिताद्रितटादुर्गादुर्गारण्यप्रचारिणी ।।९०।।
धर्मद्रवाधर्मधुराधेनुर्धीराधृतिर्ध्रुवा ।
धेनुदानफलस्पर्शाधर्मकामार्थमोक्षदा ।।९१।।
धर्मोर्मिवाहिनीधुर्याधात्रीधात्रीविभूषणम् ।
धर्मिणीधर्मशीलाचधन्विकृटिकृतावना ।।९२।।
ध्यातृपापहराध्येयाधावनीधूतकल्मषा ।
धर्मधाराधर्मसाराधनदाधनवर्धिनी ।।९३।।
धर्माधर्मगुणच्छेत्रीधत्तूरकुसुमप्रिया ।
धर्मेशीधर्मशास्त्रज्ञाधनधान्यसमृद्धिकृत् ।।९४।।
धर्मलभ्याधर्मजलाधर्मप्रसवधर्मिणी ।
ध्यानगम्यस्वरूपाचधरणीधातृपूजिता ।।९५।।

धूर्धूर्जटिजटासंस्थाधन्याधीर्धारणावती ।
नंदानिर्वाणजननीनंदिनीनुन्नपातका ।।९६।।
निषिद्धविघ्ननिचयानिजानंदप्रकाशिनी ।
नभोंगणचरीनूतिर्नम्यानारायणीनुता ।।९७।।
निर्मलानिर्मलाख्यानानाशिनीतापसंपदाम् ।
नियतानित्यसुखदानानाश्चर्यमहानिधिः ।।९८।।
नदीनदसरोमातानायिकानाकदीर्घिका ।
नष्टोद्धरणधीराचनंदनानंददायिनी ।।९९।।
निर्णिक्ताशेषभुवनानिःसंगानिरुपद्रवा ।
निरालंबानिष्प्रपंचानिर्णाशितमहामला ।।१००।।
निर्मलज्ञानजननीनिःशेषप्राणितापहृत् ।
नित्योत्सवानित्यतृप्तानमस्कार्यानिरंजना ।।१०१।।
निष्ठावतीनिरातंकानिर्लेपानिश्चलात्मिका ।
निरवद्यानिरीहाचनीललोहितमूर्धगा ।।१०२।।
नंदिभृंगिगणस्तुत्यानागानंदानगात्मजा ।
निष्प्रत्यूहानाकनदीनिरयार्णवदीर्घनौः ।।१०३।।
पुण्यप्रदापुण्यगर्भापुण्यापुण्यतरंगिणी ।
पृथुःपृथुफलापूर्णाप्रणतार्तिप्रभंजिनी ।।१०४।।
प्राणदाप्राणिजननीप्राणेशीप्राणरूपिणी ।
पद्मालयापराशक्तिःपुरजित्परमप्रिया ।।१०५।।

परापरफलप्राप्तिः पावनीचपयस्विनी ।
परानंदाप्रकृष्टार्थाप्रतिष्ठापालनीपरा ।।१०६।।
पुराणपठिताप्रीताप्रणवाक्षररूपिणी ।
पार्वतीप्रेमसंपन्नापशुपाशविमोचनी ।।१०७।।
परमात्मस्वरूपाचपरब्रह्मप्रकाशिनी ।
परमानंदनिष्पंदाप्रायश्चित्तस्वरूपिणी ।।१०८।।
पानीयरूपनिर्वाणापरित्राणपरायणा ।
पापेंधनदवज्वालापापारिः पापनामनुत् ।।१०९।।
परमैश्वर्यजननीप्रज्ञाप्राज्ञापरापरा ।
प्रत्यक्षलक्ष्मीः पद्माक्षीपरव्योमामृतस्रवा ।।११०।।
प्रसन्नरूपाप्रणिधिः पूताप्रत्यक्षदेवता ।
पिनाकिपरमप्रीतापरमेष्ठिकमंडलुः ।।१११।।
पद्मनाभपदार्घ्येणप्रसूतापद्ममालिनी ।
परर्द्धिदापुष्टिकरीपथ्यापूर्तिः प्रभावती ।।११२।।
पुनानापीतगर्भघ्नीपापपर्वतनाशिनी ।
फलिनीफलहस्ताचफुल्लांबुजविलोचना ।।११३।।
फालितैनोमहाक्षेत्राफणिलोकविभूषणम् ।
फेनच्छलप्रणुन्नैनाः फुल्लकैरवगंधिनी ।।११४।।
फेनिलाच्छांबुधाराभाफुडुच्चाटितपातका ।
फाणितस्वादुसलिलाफांटपथ्यजलाविला ।।११५।।

विश्वमाताचविश्वेशीविश्वाविश्वेश्वरप्रिया ।
ब्रह्मण्याब्रह्मकृद्ब्राह्मीब्रह्मिष्ठाविमलोदका ।।११६।।
विभावरीचविरजाविक्रांतानेकविष्टपा ।
विश्वमित्रंविष्णुपदीवैष्णवीवैष्णवप्रिया ।।११७।।
विरूपाक्षप्रियकरीविभूतिर्विश्वतोमुखी ।
विपाशावैबुधीवेद्यावेदाक्षररसस्रवा ।।११८।।
विद्यावेगवतीवंद्याबृंहणीब्रह्मवादिनी ।
वरदाविप्रकृष्टाचवरिष्ठाचविशोधनी ।।११९।।
विद्याधरीविशोकाचवयोवृंदनिषेविता ।
बहूदकाबलवतीव्योमस्थाविबुधप्रिया ।।१२०।।
वाणीवेदवतीवित्ताब्रह्मविद्यातरंगिणी ।
ब्रह्मांडकृटिव्याप्तांबुर्ब्रह्महत्यापहारिणी ।।१२१।।
ब्रह्मेशविष्णुरूपाचबुद्धिर्विभववर्धिनी ।
विलासिसुखदावैश्याव्यापिनीचवृषारणिः ।।१२२।।
वृषांकमौलिनिलयाविपन्नार्तिप्रभंजिनी ।
विनीताविनताब्रध्नतनयाविनयान्विता ।।१२३।।
विपंचीवाद्यकुशलावेणुश्रुतिविचक्षणा ।
वर्चस्करीबलकरीबलोन्मूलितकल्मषा ।।१२४।।
विपाप्माविगतातंकाविकल्पपरिवर्जिता ।
वृष्टिकर्त्रीवृष्टिजलाविधिर्विच्छिन्नबंधना ।।१२५।।

व्रतरूपावित्तरूपाबहुविघ्नविनाशकृत् ।
वसुधारावसुमतीविचित्रांगीविभावसुः ।।१२६।।
विजयाविश्वबीजंचवामदेवीवरप्रदा ।
वृषाश्रिताविषघ्नीचविज्ञानोर्म्यंशुमालिनी ।।१२७।।
भव्याभोगवतीभद्राभवानीभूतभाविनी ।
भूतधात्रीभयहराभक्तदारिद्र्यघातिनी ।।१२८।।
भुक्तिमुक्तिप्रदाभेशीभक्तस्वर्गापवर्गदा ।
भागीरथीभानुमतीभाग्यंभोगवतीभृतिः ।।१२९।।
भवप्रियाभवद्वेष्ट्रीभूतिदाभूतिभूषणा ।
भाललोचनभावज्ञाभूतभव्यभवत्प्रभुः ।।१३०।।
भ्रांतिज्ञानप्रशमनीभिन्नब्रह्मांडमंडपा ।
भूरिदाभक्तिसुलभाभाग्यवद्दृष्टिगोचरी ।।१३१।।
भंजितोपप्लवकुलाभक्ष्यभोज्यसुखप्रदा ।
भिक्षणीयाभिक्षुमाताभावाभावस्वरूपिणी ।।१३२।।
मंदाकिनीमहानंदामातामुक्तितरंगिणी ।
महोदयामधुमतीमहापुण्यामुदाकरी ।।१३३।।
मुनिस्तुतामोहहंत्रीमहातीर्थामधुस्रवा ।
माधवीमानिनीमान्यामनोरथपथातिगा ।।१३४।।
मोक्षदामतिदामुख्यामहाभाग्यजनाश्रिता ।
महावेगवतीमेध्यामहामहिमभूषणा ।।१३५।।

महाप्रभावामहतीमीनचंचललोचना ।
महाकारुण्यसंपूर्णामहर्द्धिश्चमहोत्पला ।।१३६।।
मूर्तिमन्मुक्तिरमणीमणिमाणिक्यभूषणा ।
मुक्ताकलापनेपथ्यामनोनयननंदिनी ।।१३७।।
महपातकराशिघ्नीमहादेवार्धहारिणी ।
महोर्मिमालिनीमुक्तामहादेवीमनोन्मनी ।।१३८।।
महापुण्योदयप्राप्यामायातिमिरचंद्रिका ।
महाविद्यामहामायामहामेधामहौषधम् ।।१३९।।
मालाधरीमहोपायामहोरगविभूषणा ।
महामोहप्रशमनीमहामंगलमंगलम् ।।१४०।।
मार्तंडमंडलचरीमहालक्ष्मीर्मदोज्झिता ।
यशस्विनीयशोदाचयोग्यायुक्तात्मसेविता ।।१४१।।
योगसिद्धिप्रदायाज्यायज्ञेशपरिपूरिता ।
यज्ञेशीयज्ञफलदायजनीयायशस्करी ।।१४२।।
यमिसेव्यायोगयोनिर्योगिनीयुक्तबुद्धिदा ।
योगज्ञानप्रदायुक्तायमाद्यष्टांगयोगयुक् ।।१४३।।
यंत्रिताघौघसंचारायमलोकनिवारिणी ।
यातायातप्रशमनीयातनानामकृंतनी ।।१४४।।
यामिनीशहिमाच्छोदायुगधर्मविवर्जिता ।
रेवतीरतिकृद्रम्यारत्नगर्भारमारतिः ।।१४५।।

रत्नाकरप्रेमपात्रंरसज्ञारसरूपिणी ।
रत्नप्रासादगर्भाचरमणीयतरंगिणी ॥१४६॥
रत्नार्चीरुद्ररमणीरागद्वेषविनाशिनी ।
रमारामारम्यरूपारोगिजीवातुरूपिणी ॥१४७॥
रुचिकृद्रोचनीरम्यारुचिरारोगहारिणी ।
राजहंसारत्नवतीराजत्कल्लोलराजिका ॥१४८॥
रामणीयकरेखाचरुजारीरोगरोषिणी ।
राकारंकार्तिशमनीरम्यारोलंबराविणी ॥१४९॥
रागिणीरंजितशिवारूपलावण्यशेवधिः ।
लोकप्रसूर्लोकवंद्यालोलत्कल्लोलमालिनी ॥१५०॥
लीलावतीलोकभूमिर्लोकलोचनचंद्रिका ।
लेखस्रवंतीलटभालघुवेगालघुत्वहृत् ॥१५१॥
लास्यत्तरंगहस्ताचललितालयभंगिगा ।
लोकबंधुर्लोकधात्रीलोकृत्तरगुणोर्जिता ॥१५२॥
लोकत्रयहितालोकालक्ष्मीर्लक्षणलक्षिता ।
लीलालक्षितनिर्वाणालावण्यामृतवर्षिणी ॥१५३॥
वैश्वानरीवासवेड्यावंध्यत्वपरिहारिणी ।
वासुदेवांघ्रिरेणुघ्नीवज्रिवज्रनिवारिणी ॥१५४॥
शुभावतीशुभफलाशांतिः शांतनुवल्लभा ।
शूलिनीशैशववयाः शीतलाऽमृतवाहिनी ॥१५५॥

शोभावतीशीलवतीशोषिताशेषकिल्बिषा ।
शरण्याशिवदाशिष्टाशरजन्मप्रसूः शिवा ।।१५६।।
शक्तिः शशांकविमलाशमनस्वसृसंमता ।
शमाशमनमार्गघ्नीशितिकंठमहाप्रिया ।।१५७।।
शुचिः शुचिकरीशेषाशेषशायिपदोद्भवा ।
श्रीनिवासश्रुतिः श्रद्धाश्रीमतीश्रीः शुभव्रता ।।१५८।।
शुद्धविद्याशुभावर्ताश्रुतानंदाश्रुतिस्तुतिः ।
शिवेतरघ्नीशबरीशांबरीरूपधारिणी ।।१५९।।
श्मशानशोधनीशांताशश्वच्छतधृतिष्टुता ।
शालिनीशालिशोभाढ्याशिखिवाहनगर्भभृत् ।।१६०।।
शंसनीयचरित्राचशातिताशेषपातका ।
षड्गुणैश्वर्यसंपन्नाषडंगश्रुतिरूपिणी ।।१६१।।
षंढताहारिसलिलाष्टयायन्नदनदीशता ।
सरिद्वराचसुरसासुप्रभासुरदीर्घिका ।।१६२।।
स्वःसिंधुः सर्वदुःखघ्नीसर्वव्याधिमहौषधम् ।
सेव्यासिद्धिः सतीसूक्तिः स्कंदसूश्चसरस्वती ।।१६३।।
संपत्तरंगिणीस्तुत्यास्थाणुमौलिकृतालया ।
स्थैर्यदासुभगासौख्यास्त्रीषुसौभाग्यदायिनी ।।१६४।।
स्वर्गनिःश्रेनिकासूक्ष्मास्वधास्वाहासुधाजला ।
समुद्ररूपिणीस्वर्ग्यासर्वपातकवैरिणी ।।१६५।।

स्मृताघहारिणीसीतासंसाराब्धितरंडिका ।
सौभाग्यसुंदरीसंध्यासर्वसारसमन्विता ।।१६६।।
हरप्रियाहृषीकेशीहंसरूपाहिरण्मयी ।
हृताघसंघाहितकृद्धेलाहेलाघगर्वहृत् ।।१६७।।
क्षेमदाक्षालिताघौघाक्षुद्रविद्राविणीक्षमा ।

इतिनामसहस्रंहिगंगायाः कलशोद्भव ।
कीर्तयित्वानरः सम्यग्गंगास्नानफलंलभेत् ॥१६८॥

168. O Pot-born Sage, this is the list of the thousand names of Ganga. By reciting this a man will obtain the benefit of a holy bath in Ganga.

सर्वपापप्रशमनंसर्वविघ्नविनाशनम् ।
सर्वस्तोत्रजपाच्छ्रेष्ठंसर्वपावनपावनम् ॥१६९॥

169. It subdues all the sins. It destroys all the obstacles. It is far better than all other hymns and Japa. It makes every sacred thing more sacred.

श्रद्धयाभीष्टफलदंचतुर्वर्गसमृद्धिकृत् ।
सकृज्जपादवाप्नोतिह्येकक्रतुफलंमुने ॥१७०॥

170. If one has faith, this will yield any desired benefit. It gives abundance in all the great human endeavors. By reciting it once, one obtains the fruit of performing one sacrifice, O sage.

सर्वतीर्थेषुयः स्नातः सर्वयज्ञेषुदीक्षितः ।
तस्ययत्फलमुदिष्टंत्रिकालपठनाच्चतत् ॥१७१॥

171. By reciting this three times, one gets the benefit said to accrue one who takes the holy dip in all sacred rivers or gets initiated into all Yagyas.

सर्वव्रतेषुयत्पुण्यंसम्यक्चीर्णेषुवाडव ।
तत्फलंसमवाप्नोतित्रिसंध्यंनियतः पठन् ॥१७२॥

172. One who invariably recites this hymn three times, O Vadava gets that merit which results from all holy vows well observed.

स्नानकालेपठेद्यस्तुयत्रकुत्रजलाशये ।
तत्रसन्निहितानूनंगंगात्रिपथगामुने ॥१७३॥

173. If anyone recites this at the time of taking bath, whatever may be the place of water, Ganga flowing in three streams presents herself there, O sage.

श्रेयोर्थीलभतेश्रेयोधनार्थीलभतेधनम् ।

कामीकामानवाप्नोतिमोक्षार्थीमोक्षमाप्नुयात् ।।१७४।।

174. A person who seeks welfare, will obtain welfare; one who seeks wealth, obtains wealth; one who seeks love, shall obtain love; and one who seeks salvation, shall obtain salvation.

वर्षंत्रिकालपठनाच्छ्रद्धयाशुचिमानसः ।

ऋतुकालाभिगमनादपुत्रःपुत्रवान्भवेत् ।।१७५।।

175. One should faithfully recite this hymn three times a day for a year, keeping his mind pure. A sonless man will then approach his wife at the prescribed period after menstruation. He will thereby become blessed with a son.

नाकालमरणंतस्यनाग्निचोराहिसाध्वसम् ।

नाम्नांसहस्रंगंगायायोजपेच्छ्रद्धयामुने ।।१७६।।

176. If anyone recites the Thousand Names of Ganga with faith, O sage, he shall not die prematurely. He need not be afraid of fire, thief or serpent.

गंगानामसहस्रंतुजप्त्वाग्रामांतरंव्रजेत् ।

कार्यसिद्धिमवाप्नोतिनिर्विघ्नोगेहमाविशेत् ।।१७७।।

177. If after reciting the Thousand Names of Ganga, one goes to another village for some work, he will attain success therein and will return home without any hindrance.

तिथिवारर्क्षयोगानांनदोषःप्रभवेत्तदा ।

यदाजप्त्वाव्रजेदेतत्स्तोत्रंग्रामांतरंनरः ।।१७८।।

178. If the man goes to another village after reciting the Thousand Names, the defects of the lunar day, the day of the week, the star or stellar combination with the moon will not be effective.

आयुरारोग्यजननंसर्वोपद्रवनाशनम् ।

सर्वसिद्धिकरंपुंसांगंगानामसहस्त्रकम् ॥१७९॥

179.The set of the Thousand Names of Ganga is conductive to longevity and freedom from ailments; it is destructive of all harassment and causes the attainment of all powers by the men.

जन्मांतरसहस्त्रेषुयत्पापंसम्यगर्जितम् ।

गंगानामसहस्त्रस्यजपनात्तत्क्षयंव्रजेत् ॥१८०॥

180. By the recitation of the Thousand Names of Ganga , the sins that have been acquired during thousands of previous birth get destroyed.

ब्रह्मघ्नोमपिःस्वर्णस्तेयीचगुरुतल्पगः ।

तत्संयोगीभ्रूणहंतामातृहापितृहामुने ॥१८१॥

विश्वासघातीगरदःकृतघ्नोमित्रघातकः ।

अग्निदोगोवधकरोगुरुद्रव्यापहारकः ॥१८२॥

महापातकयुक्तोपिसंयुक्तोप्युपपातकैः ।

मुच्यतेश्रद्धयाजप्त्वागंगानामसहस्त्रकम् ॥१८३॥

181-183. By faithfully reciting the Thousand Names of Ganga, all these sinners become free from sins:
a slayer of a Brahmana, a drink-addict, a thief of gold, a defilar of the bed of the preceptor, a man who associates with these sinners, a destroyer of fetus, a slayer of mother, a slayer of father, one who commits breach of trust, one who administers poison, the ungrateful, a betrayer of friends, an arsonist, a slayer of a cow, a thief of the possession of the preceptor, one guilty of major or minor sins.

आधिव्याधिपरिक्षिप्तोघोरतापपरिप्लुतः ।

मुच्यतेसर्वदुःखेभ्यःस्तवस्यास्यानुकीर्तनात् ॥१८४॥

184. One who is agitated due to mental anguish or physical ailment, one who is excessively distressed, becomes rid of all miseries by repeating this hymn.

संवत्सरेणायुक्तात्मापठन्भक्तिपरायणः ।
अभीप्सितांलभेत्सिद्धिंसर्वैः पापैः प्रमुच्यते ॥१८५॥

185. With the mind concentrated and controlled, one should recite this for a year with great devotion. He shall obtain the desired benefit. He becomes relieved of all sins.

संशयाविष्टचित्तस्यधर्मविद्वेषिणोपिच ।
दांभिकस्यापिहिंस्हस्यचेतोधर्मपरंभवेत् ॥१८६॥

186. One whose mind is afflicted with doubts, one who hates piety, a hypocrite and one violently ferocious - all these shall become righteous.

वर्णाश्रमपथीनस्तुकामक्रोधविवर्जितः ।
यत्फलंलभतेज्ञानीतदाप्नोत्यस्यकीर्तनात् ॥१८७॥

187. A man who follows the discipline of the prescribed stage of life and status in the society, one devoid of anger and lust and a man of spiritual knowledge - whatever benefit these obtain, one obtains by reciting this hymn.

गायत्र्ययुतजप्येनयत्फलंसमुपार्जितम् ।
सकृत्पठनतः सम्यक्तदशेषमवाप्नुयात् ॥१८८॥

188. By reciting this hymn earnestly once, one shall obtain that benefit which can be acquired by reciting Gayatri ten thousands times.

गांदत्त्वावेदविदुषेयत्फलंलभतेकृती ।
तत्पुण्यंसम्यगाख्यातंस्तवराजसकृज्जपात् ॥१८९॥

189. By reciting this Stavaraja, one shall acquire that merit which a blessed man obtains after making the gift of a cow to a Vedic scholar.

गुरुशुश्रूषणांकुर्वन्यावज्जीवंनरोत्तमः ।
यत्पुण्यमर्जयेत्तद्भाग्वर्षंत्रिषवणांजपन् ॥१९०॥

190. A person reciting this hymn thrice a day and continuing so for one year, shall acquire that merit which an excellent man gets by serving his preceptor throughout his life.

वेदपारायणात्पुण्यंयदत्रपरिपठ्यते ।

तत्षण्मासेनलभतेत्रिसंध्यंपरिकीर्तनात् ॥१९१॥

191. By reciting this hymn thrice a day for six months, one obtains that merit laid down here as the result of the study of the Vedas.

गंगायाः स्तवराजस्यप्रत्यहंपरिशीलनात् ।

शिवभक्तिमवाप्नोतिविष्णुभक्तोऽथवाभवेत् ॥१९२॥

192. By practicing the recitation of the Stavaraja of Ganga every day, one shall acquire devotion to Shiva or shall become devotee of Vishnu.

यः कीर्तयेदनुदिनंगंगानामसहस्रकम् ।

तत्समीपेसहचरीगंगादेवीसदाभवेत् ॥१९३॥

193. If anyone recites the Thousand Name of Ganga every day, Goddess Ganga shall always attend to him closely.

सर्वत्रपूज्योभवतिसर्वत्रविजयीभवेत् ।

सर्वत्रसुखमाप्नोतिजाह्नवीस्तोत्रपाठतः ॥१९४॥

194. By reciting this hymn of Ganga, one becomes venerated everywhere, successful on all occasions and happy everywhere.

सदाचारीसविज्ञेयः सशुचिस्तुसदैवहि ।

कृतसर्वसुरार्चः सकीर्तयेदिमांस्तुतिम् ॥१९५॥

195. He who recites this hymn should be known as a person of good conduct; he is always clean and pure; he is one who has worshipped all the gods.

तस्मिंस्तृप्तेभवेत्तृप्ताजाह्नवीनात्रसंशयः ।

तस्मातसर्वप्रयत्नेनगंगाभक्तंसमर्चयेत् ॥१९६॥

196. If he is satisfied, Ganga shall become pleased undoubtedly; hence by all means, one should propitiate the devotee of Ganga.

स्तवराजमिमंगांगंशृणुयाश्चिवैपठेत् ।

श्रावयेदथतद्भक्तान्दंभलोभविवर्जितः ॥१९७॥

मुच्यतेत्त्रिविधैःपापैर्मनोवाक्कायसंभवैः ।

क्षणान्निष्पापतामेतिपितृणांचप्रियोभवेत् ॥१९८॥

197-198. He who listens to or recites this Stavaraja of Ganga and makes other devotees listen to it without hypocrisy and greed, shall become freed from the three types of sins originating from the mind, speech and body. He shall be devoid of sins in an instant and be the beloved of the Manes.

सर्वदेवप्रियश्चापिसर्वर्षिगणसंमतः ।

अंतेविमानमारुह्यदिव्यस्त्रीशतसंवृतः ॥१९९॥

दिव्याभरणसंपन्नेदिव्यभोगसमन्वितः ।

नंदनादिवनेस्वैरंदेववत्सप्रमोदते ॥२००॥

199-200. He shall be beloved of the Devas, he shall be honored by all the groups of sages; at the end of his life he shall ride in an aerial chariot surrounded by hundreds of celestial damsels. He shall be richly adorned with divine ornaments; he shall enjoy celestial pleasures in Nandana and other parks, he shall rejoice like a Deva.

भुज्यमानेषुविप्रेषुश्राद्धकालेविशेषतः ।

जपन्निदंमहास्तोत्रंपितृणांतृप्तिकारकम् ॥२०१॥

201. While Brahmanas take their food particularly on the occasion of a Shraddha, recitation of this hymn causes delight to the Manes.

यावंतितत्रसिक्थानियावंतोंऽम्बुकणाःस्थिताः ।

तावंत्येवहिवर्षाणिमोदंतेस्वःपितामहाः ॥२०२॥

202. His ancestors rejoice in  heaven for as many years as there are boiled rice-grains or drops of water there.

यथाप्रीणांतिपितरोगंगायांपिंडदानतः ।

तथैवतृप्नुयुःश्राद्धेस्तवस्यास्यानुसंश्रवात् ॥२०३॥

203. By hearing this hymn recited on the occasion of Shraddha the Manes shall become delighted in the same manner as through the offering of balls of rice in Ganga.

एतत्स्तोत्रंगृहेयस्यलिखितंपरिपूज्यते ।

तत्रपापभयंनास्तिशुचितद्भवनंसदा ॥२०४॥

204. If this hymn written and worshipped in a house, that house is pure always. There is no fear from sins there.

अगस्तेकिंबहूक्तेनशृणुमेनिश्चितंवचः ।

संशयोनात्रकर्तव्यःसंदेग्धरिफलंनहि ॥२०५॥

205. O Agastya, of what avail is much talk? Listen to my firm words. No doubt need be entertained in this respect. No benefit comes to a person who doubts.

यावंतिमर्त्यैस्तोत्राणिमंत्रजालान्यनेकशः ।

तावंतिस्तवराजस्यगांगेयस्यसमानिन ॥२०६॥

206. There are many groups of Mantras and hymns in the mortal world. They are not equal to the Stavaraja of  Ganga.

यावज्जन्मजपेस्तुनाम्नामेतत्सहस्त्रकम् ।

सकीकटेष्वपिमृतोनपुनर्गर्भमाविशेत् ॥२०७॥

207. If a person recites this hymn of a thousand names throughout his life, he shall not be reborn even if he were to die in Kikatas.

नित्यंनियमवानेतौजपेत्स्तोत्रमुत्तमम् ।

अन्यत्रापिविपन्नःसगंगातीरेमृतोभवेत् ॥२०८॥

208. If a man regularly recites this hymn, observing restrains, he shall become like a man dying on the banks of Ganga even if he dies elsewhere.

एतत्स्तोत्रवरंरम्यंपुराप्रोक्तंपिनाकिना ।

विष्णावेनिजभक्तायमुक्तिबीजाक्षरास्पदम् ।।२०९।।

209. This excellent and exquisite hymn was formerly proclaimed by the Pinaka-wielding Lord to Vishnu, his devotee. It is a hymn with the syllables- 'seeds' of salvation.

गंगास्नानप्रतिनिधिः स्तोत्रमेतन्मयेरितम् ।

सिस्नासुर्जाह्नवींतस्मादेतत्स्तोत्रंजपेतसुधीः ।।२१०।।

210. This stotra stated by me is a substitute for the holy bath in Ganga. Hence, a wise man desirous of getting the benefit of a holy dip in Ganga should recite this hymn.

इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यां

संहितायाचतुर्थेकाशीखंडेपूर्वार्द्धेगंगासहस्रनाम

कथनंनामैकोनत्रिंशत्तमोऽध्यायः ।।२११।।